# अथ सद्य: आरोग्यकर सूर्यार्घ्यदानविधानम्

सुदिने कृतनित्यक्रिय आचम्य प्राणानायम्य देशकाली संकीर्त्य **मम अमुकस्य वा अमुकज्वरादिव्याधिसमूलनिरासद्वारा सद्य आरोग्यार्थं श्रीसवितृसूर्यनारायणप्रीत्यर्थं हंसादिसप्ततिनामभिः श्रीसूर्य्याय सप्तत्यर्घ्यदानमहं करिष्ये** । इतिसंकल्पः ।

भूतशुद्ध्यादि कृत्वा सामान्यार्घ्यं कल्पयेत् ।

विगृह्यपाणियुग्मेन ताम्रपात्रं सुनिर्मलम् ।


आदि शंकर वैदिक विद्या संस्थान

दूरभाष: 9044016661

जानुभ्यामवनीं गत्वा परिपूजलेन च ॥ १ ॥

करवीरादिकुसुमैर्रँक्तचन्दन मिश्रितैः ।

दूर्वाङ्ङ्कुरेरक्षतैश्च निक्षिप्तेः पात्रमध्यतः ॥ २ ॥

दद्यादध्यमनर्धाय सवित्रे ध्यानपूर्वकम् ॥

उपमौली समानीय तत्पात्रे नान्यदिङ्गनाः॥ ३ ॥

प्रतिमन्त्रं नमस्कुर्यादुदयास्तमिते रवौ।

अनया नामसप्तत्या महामन्त्ररहस्यया ॥ ४ ॥

एवमर्घ्य प्रकल्प्य पाद्यादिभिः सम्पूज्य प्रणम्य यथोक्तविधिना प्रत्येकनाम्ना बृहत्पात्रेघटे जले वा अर्घ्यं दद्यात् । तद्यथा-

ॐ हंसाय नमः ॥ १ ॥ ॐ भानवे नमः ॥ २ ॥ ॐ सहस्रांशवे नमः ॥ ३ ॥ ॐ तपनाय नमः ॥ ४ ॥ ॐ तापनाय नमः ॥ ५ ॥ ॐ रवये नमः ॥ ६ ॥ ॐ विकर्तनाय नमः ॥ ७ ॥ ॐ विवस्वते नमः ॥ ८ ॥ ॐ विश्वकर्मणे नमः ॥ ९ ॥ ॐ विभावसवे नमः ॥ १० ॥ॐ विश्वरूपाय नमः ॥ ११ ॥ ॐ विश्वकर्त्रे नमः ॥ १२ ॥ ॐ मार्तण्डाय नमः।। १३ ।। ॐ मिहिराय नमः ॥ १४ ॥ ॐ अंशुमते नमः ॥ १५ ॥

ॐ आदित्याय नमः ।। १६ ।। ॐ उष्णगवे नमः ॥ १७ ॥
ॐ सूर्याय नमः ॥ १८ ॥ ॐ अर्य्यमणे नमः ॥ १९ ॥ ॐ
व्रघ्नाय नमः ॥ २ ॥ ॐ दिवाकराय नमः ॥ २१ ॥ ॐ
द्वादशात्मने नमः ॥ २२ ॥ ॐ सप्तयाय नमः ॥ २३ ॥ ॐ
भास्कराय नमः ॥२४॥ ॐ अहस्कराय नमः ॥ २५ ॥ ॐ
खगाय नमः ॥ २६ ॥ ॐ सुराय नमः ॥ २७ ॥ ॐ
प्रभाकराय नमः ॥ २८ ॥ ॐ श्रीमते नमः ॥ २९ ॥ ॐ
लोकचक्षुपे नमः ॥ ३० ॥ ॐ ग्रहेश्वराय नमः ॥ ३१ ॥ ॐ
लोकेशाय नमः ॥ ३२ ॥ ॐ लोकसाक्षिणे नमः ॥ ३३ ॥
ॐ तमोरये नमः ॥३४॥ ॐ शाश्वताय नमः ॥३५॥ ॐ
मुचये नमः ॥ ३६ ॥ ॐ गभस्तिहस्ताय नमः ||३७|| ॐ
तीव्रांशवे नमः ॥३८॥ ॐ तरणये नमः ॥ ३९ ॥ ॐ
सुमहोरुणये नमः ॥ ४० ॥ ॐ द्युमणये नमः ॥४१॥ ॐ
हरिदश्वाय नमः ॥ ४२ ॥ ॐ अर्काय नमः ॥ ४३ ॥ ॐ
भानुमते नमः ||४४|| ॐ भयनाशनाय नमः ॥ ४५ ॥ ॐ
छन्दोऽश्वाय नमः ॥ ४६ ।। ॐ वेदवेद्याय नमः ।। ४७ ।। ॐ
भास्वते नमः ॥ ४८ ॥ ॐ पूष्णे नमः ॥ ४९ ॥ ॐ
वृषाकपये नमः ॥ ५० ॥ ॐ एकचक्ररयाय नमः ॥ ५१ ॥
ॐ मित्राय नमः ॥ ५२ ॥ ॐ मन्देहारये नमः ॥ ५३ ॥ ॐ

तमिस्रहन्त्रे नमः ॥ ५४ ॥ ॐ दैत्यहन्त्रे नमः ॥ ५५ ॥ ॐ पापहर्त्रे नमः ॥ ५६ ॥ ॐ धर्म्माय नमः ॥ ५७ ॥ ॐ प्रकाशकाय नमः ॥ ५८ ॥ ॐ हेलिकाय नमः ॥ ५९ ॥ ॐ चित्रभानवे नमः ॥ ६० ॥ ॐ कलिघ्नाय नमः ॥ ६१ ॥ ॐ तार्क्ष्यवाहनाय नमः ॥ ६२ ॥ ॐ दिक्पतये नमः॥ ६३ ॥ ॐ पद्मिनीनाथाय नमः ॥ ६४ ॥ ॐ कुशेशयकराय नमः ॥ ६५ ।। ॐ हरये नमः ॥ ६६ ॥ ॐ घर्मरश्मये नमः ॥ ६७ ॥ ॐ दुनिरीक्ष्याय नमः ॥ ६८ ।। ॐ चण्डांशवे नमः ॥ ६९ ॥ ॐ कश्यपात्मजाय नमः ॥ ७० ॥

एभिः सप्तति- संख्याकैः पुण्यैः सूर्यस्य नामभिः ।

प्रणवादिचतुर्थ्यन्तैर्नमस्कारसमायुतंः ॥ १ ॥

प्रत्येकमुच्चरन्नाम दृष्ट्वा दृष्ट्वा दिवाकरम् ।

एवं कुर्वन्नरो याति न दारिद्रयं न शोकभाक् ॥ २ ॥

व्याधिभिर्मुच्यते घोरेरपि जन्मान्तराजितैः ।

विनौषधविना वैद्योविना वश्यपरिग्रहैः ॥ ३ ॥

कालेन निधनं प्राप्य सूर्यलोके महीयते ॥

**श्रींसूर्य्यार्घ्यं विधानस्य सर्वव्याधिहरो विधिः समाप्तः ।**

आदि शंकर वैदिक विद्या संस्थान

दूरभाष: 9044016661